ॐ

# श्रीगणेशाय नमः

ॐ वनस्पतिरसो दिव्यो गन्धाढ्यो सुमनोहरः आघ्रेयः सर्वदेवा-
नां धूपोयं शिव गृह्यताम् ॥ १ ॥ स्वप्रकाशःस्वतेजश्च नमो मङ्गल-
भास्वरः ज्ञानशक्तिप्रतीकाशो दीपोयं शिव गृह्यताम् ॥ २ ॥ चामरं
रजनीनाथ मरीचिप्रभमुत्तमम् । हेमदण्डयुतं दिव्यं गृहाण गिरि-
जापते ॥ ३ ॥ जय सर्वजनाधीश जय गौरीपते शिव । जय देव म-
हादेव जय गङ्गाधरेश्वर ॥ ४ ॥ योभ्यर्चितः सुरगणैर्वरसिद्धिहेतो-
श्छेत्तुं भयानि च करे परशुं दधानः । देवः स शम्भुदयितापरिवर्धि-
तश्रीर्विघ्नान्निवारयतु वारणराजवक्त्रः ॥ ५ ॥ सिन्दूरकुंकुमहु-
ताशनविद्रुमार्क रक्ताब्जदाडिमनिभाय चतुर्भुजाय हेरम्बभैरवग-
णेश्वरनायकाय सर्वार्थसिद्धिफलदाय गणेश्वराय ॥ ६ ॥ कनकरचि-
तगण्ठः निर्मला यस्य शक्तिः पवनजवविधूता यस्य रक्तापताका ।
गगनतलविचारी यस्य केतुर्मयूरः स दहतु मम शत्रून्कीर्तितः का-
र्तिकीयः ॥ ७ ॥ वन्दे रुद्रमुमापतिं सुरगुरुं वन्दे जगत्कारणं वन्दे
पन्नगभूषणं शशिधरं वन्दे पशूनां पतिम् । वन्दे सूर्यशशाङ्कव-
ह्निनयनं वन्दे मुकुन्दप्रियं वन्दे शैलसुतामनोहरतनुं वन्दे शिवं
शङ्करम् ॥ ८ ॥ व्याप्तचराचर ॥ जं शिव ॐकारः ॥ अतिभीषण ॥
जय [illegible] ॥ अच्युतं केशवं ॥ अ[illegible]मंऽगनां ॥

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

## अथ शिवस्तुतिः ॥

ॐ व्याप्तचराऽचरभावविशेषं, चिन्मयमेकमऽनन्तमनादिम् ।
भैरवनाथमऽनाथशरण्यं, त्वन्मयचित्ततया हृदि वन्दे ॥ १ ॥
त्वन्मयमेतदऽशेषमिदानीं, भाति मम त्वदऽनुग्रहशक्त्या ।
त्वं च महेश ! सदैव ममाऽत्मा, स्वाऽऽत्ममयं मम तेन समस्तम् ॥ २ ॥
स्वात्मनि विश्वगते त्वयि नाथे, तेन न संसृतिभीतिः कथाऽस्ति ।
सत्स्वपि दुर्धरदुःखविमोह,त्रासविधायिषु कर्मगणेषु ॥ ३ ॥
अन्तक ! मां प्रति मा दृशमेनां, क्रोधकरालतमां विनिधेहि ।
शंकरसेवनचिन्तनधीरो, भीषणभैरवशक्तिमयोऽस्मि ॥ ४ ॥
इत्थमुपोढभवन्मयसंविद्दीधितिदारितभूरितमिस्रः ।
मृत्युयमान्तककर्मपिशाचै,र्नाथ ! नमोऽस्तु न जातु बिभेमि ॥ ५ ॥
प्रोदितसत्यविबोधमरीचि,प्रोक्षितविश्वपदार्थसतत्त्वः ।
भावपरामृतनिर्भरपूर्णे, त्वय्यऽहमाऽऽत्मनि निर्वृतिमेमि ॥ ६ ॥
मानसगोचरमेति यदैव,क्लेशदशाऽतनुतापविधात्री ।
नाथ ! तदैव ममत्वदऽभेदस्तोत्रपराऽमृतवृष्टिरुदेति ॥ ७ ॥
शंकर ! सत्यमिदं व्रतदान,स्नानतपो भवतापविनाशि ।
तावकशास्त्रपराऽमृतचिन्ता स्यन्दति चेतसि निर्वृतिधाराः ॥ ८ ॥
नृत्यति गायति हृष्यति गाढं, संविदियं मम भैरवनाथ ।
त्वां प्रियमाऽप्य सुदर्शनमेकं, दुर्लभमऽन्यजनैः समयज्ञम् ॥ ९ ॥
वसुरसपौषे कृष्णदशम्या,मऽभिनवगुप्तः स्तवमिदमकरोत् ।
येन विभुर्भवमरुसन्तापं शमयति झटिति जनस्य दयालुः ॥ १० ॥

इति अभिनवगुप्ताऽऽचार्यकृता शिवस्तुतिः समाप्ता ॥

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

ज़ै शिव ॐकारः स्वामी हर शिव ॐकारः ब्रह्मा विष्णु सदाशिव भोलानाथ महेश्वर अर्धांगेगौरः ॐ हर हर हर महादेव ॥ जै शिव ॐकारः० ॥ १ ॥ एकानन चतुरानन पञ्चानन राजे शिव पञ्चानन राजे हंसासन गरुडासन वृषभासन साजे ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ २ ॥ द्विभुज चार चतुर्भुज दशभुज तू सोहै शिवजी दशभुज तू सोहै तीनों एकसुरूपाः त्रिभुवन मन मोहै ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ ३ ॥ अक्षमाला वनमाला रुण्डमाला धारी शिवजी रुण्डमाला धारी चन्दनमृगमदसुलेपन बाले शशिधारी ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ ४ ॥ श्वेताम्बर पीताम्बर भस्माम्बरअंगे शिवजी भस्माम्बरअंगे सनकादिक पिपलादिक भूतादिक संगे ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ ५ ॥ करमध्ये करमण्डल चक्र त्रिशूल धर्ता शिवजी चक्र त्रिशूल धर्ता युगहर्ता युगकर्ता युगनिश्चयहर्ता ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ ६ ॥ तीनों एकसुरूपाः अन्तरनान्तरसो शिवजी अन्तरनान्तरसो मनमांगत फलपावत भवसागरतरसो ॐ हर०जै शिव ॐकारः ० ७ चौंसठ जोगन मण्डल गावत निरत करत भैरव शिव जी निरत करत भैरव भाजे ताल मृदंगा और भाजत डुमरु ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ ८ ॥ काशीमें एकनन्दा ब्रह्मचारी शिवजी एकनन्दा ब्रह्मचारी नित्य उठ भोगलगावत महिमाअधिकारी ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ ९ ॥ शिवजीकी आरति प्रतिदिन जोगावे शिवजी सब दिन जोगावे भजत शिवानन्दस्वामी भजत हरि हर स्वामी मनइच्छाफलपावे ॐ हर हर हर महादेव जै शिव ॐकारः० ॥ १० ॥

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

अतिभीषणकटुभाषणयमकिंकरपटले कृतताडनपरिपीडनमरणागमसमये । उमया सह मम चेतसि यमशासन निवसन् शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ १ ॥ अतिदुर्नय चपलेन्द्रियरिपुसञ्चयदलिते पविकर्कशकटुजल्पितखलगर्हणचलिते । शिवया सह मम चेतसि शशिशेखर निवसन् शिव शंकर० ॥ २ ॥ भवभञ्जन सुररञ्जन खलुवञ्चन पुरहन् दनुजान्तक मदनान्तक रविजान्तक भगवन् । गिरिजावर करुणाकर परमेश्वर भयहन् शिव शंकर० ॥ ३ ॥ शक्रशासन क्रतुशासन चतुराश्रमविषमे कलिविग्रहभवदुर्ग्रहनृपदुर्बलसमये । द्विजक्षत्रियवनिताशिशुदरकम्पितहृदये शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ४ ॥

## अथ जयस्तुतिर्विष्णोः ॥

जय नारायण जय पुरुषोत्तम जय वामन कंसारे उद्धर मामसुरेशविनाशिन् पतितोऽहं संसारे । घोरं हर मम नरकरिपो केशव कल्मषभारं मामनुकम्पय दीनमनाथं कुरु भवसागरपारम् ॥ १ ॥ जय जय देव जयाऽसुरसूदन जय केशव जय विष्णो । जय लक्ष्मीमुखकमलमधुव्रत जय दशकन्दरजिष्णोः घोरं हर० ॥ २ ॥ यद्यपि सकलमऽहं कलयामि हरे नहि किमऽपि ससत्त्वं । तदऽपि न मुञ्चति मामिदमऽच्युत पुत्रकलत्र ममत्वम् घोरं हर० ॥ ३ ॥ पुनरऽपि जननं पुनरपि मरणं, पुनरपि गर्भनिवासं । सोढुमऽलं पुनरऽस्मिन्माधव मामुद्धर निजदासम् घोरं हर० ॥ ४ ॥ त्वं जननी त्वं जनकः प्रभुरऽच्युत त्वं स्वहृत्कुलमित्रं । त्वं शरणं शरणागतवत्सल त्वं भवजलधिवहित्रम् घोरं हर० ॥ ५ ॥ जनकसु-

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

तापतिचरणपरायणशङ्करमुनिवरगीतं धारय मनसि कृष्ण पुरुषोत्तम
वारय संसृतिभीतिम्। घोरं हर० ॥ ६ ॥ अच्युतं केशवं रामना-
रायणं कृष्णदामोदरं वासुदेवं हरिम्। श्रीधरं माधवं गोपिकावल्लभं
जानकीनायकं रामचन्द्रं भजे ॥ १ ॥ शूरजं शैशवं सत्यभामाधवं
श्रीधरं श्रीपतिं राधिकाराधितम्। इन्दिरामन्दिरं चेतसा सुन्दरं दे-
वकीनन्दनं नन्दजं सम्भजे ॥ २ ॥ अङ्गनामङ्गनामन्तरे माधवो मा-
धवं माधवं चान्तरेणांगना। इत्थमाकल्पिते मण्डले मध्यगः स-
ञ्जगौ वेणुना देवकीनन्दनः ॥ ३ ॥ बालिका बालिका तालली-
लालयः संगसन्दर्शितभ्रूलताविभ्रमः। गोपिका गीतदत्तावदानः
स्वयं सञ्जगौ वेणुना देवकीनन्दनः ॥ ४ ॥ जयतु जयतु देवो
देवकीनन्दनोयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः। जयतु ज-
यतु मेघश्यामलः कोमलांगो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः
॥ ५ ॥ भोल श्रीस्वामी अमृतेश्वर महादेवकी जय ॥ इति प्रथमाआर-
तिः ॥ ओं नागेन्द्रहाराय त्रिलोचनाय भस्मांगरागाय महेश्वराय।
देवाधिदेवाय दिगंबराय तस्मै नकाराय नमः शिवाय ॥ १ ॥ मा-
तंगचर्मांबरभूषणाय समस्तगीर्वाणगणार्चिताय। त्रैलोक्यनाथाय
पुरान्तकाय तस्मै मकाराय नमः शिवाय ॥ २ ॥ शिवासुखाम्भो-
जविकासनाय दक्षस्य यज्ञस्य विनाशनाय। चन्द्रार्कवैश्वानरलोचना-
य तस्मै शिकाराय नमः शिवाय ॥ ३ ॥ वसिष्ठकुम्भोद्भवगौतमा-
दिमुनीन्द्रवन्द्याय गिरीश्वराय। श्रीनीलकण्ठाय वृषध्वजाय तस्मै
वकाराय नमः शिवाय ॥ ४ ॥ यज्ञस्वरूपाय जटाधराय पिनाकह-
स्ताय सनातनाय। नित्याय शुद्धाय निरञ्जनाय तस्मै यकाराय
नमः शिवाय ॥ ५ ॥ शिव[illegible]स्तोत्रं यः पठेच्छिवसन्निधौ।

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ओंकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः। कामदं मोक्षदं चैव ओंकारं तं नमाम्यहम् ॥ १ ॥ न जातो न मृतो यश्च क्षयो यस्य न विद्यते। नमन्ति देवताः सर्वे नकारं तं नमाम्यहम् ॥ २ ॥ महादेवं महावक्त्रं महाध्यानपरायणम्। महापापहरं देवं मकारं तं नमाम्यहम् ॥ ३ ॥ शिवात्परतरो नास्ति शिवशास्त्रेषु निश्चितम्। शमन्ति सर्वपापानि शिकारं तं नमाम्यहम् ॥ ४ ॥ वाहनो वृषभो यस्य वासुकिः कण्ठभूषणम्। वामे शक्तिधरं देवं वकारं तं नमाम्यहम् ॥ ५ ॥ यत्र यत्र स्थितो देवःसर्वव्यापी महेश्वरः। यो गुरुः सर्वदेवानां यकारं तं नमाम्यहम् ॥ ६ ॥ (षडक्षरमिदंस्तोत्रं यः पठेच्छिवसन्निधौ। शिवलोकमवाप्नोति शिवेन सह मोदते ॥) करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम्। विदितमविदितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शम्भो ॥ अपारसंसारमहाम्बुधिप्लवः समस्तपापेन्धनहव्यवाहनः। विपद्द्रुमोन्मूलनचण्डमारुतो नमः शिवायेति ममास्तु सज्जपः ॥ आकर्ण्याऽशु कृपणस्य वचांसि सम्यक् लब्धोऽसि नाथ बहुभिर्ननु जन्मवृन्दैः। अद्य प्रभो यदि दयां कुरुषे न मे त्वं त्वत्तः परं कथय कं शरणं व्रजामि ॥ ददातीष्टान्भोगान् क्षपयति रिपून् हन्ति विपदो दहत्याधीन्व्याधीञ्शमयति सुखानि प्रतनुते। हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ॥ पिता माता भ्राता सुहृदनुचरः सद्म गृहिणी वपुः पुत्रो मित्रं धनमपि यदा मां विजहति। तदा मे भिन्दाना सपदि भयमोहान्धतमसं महाज्योतिर्मे मातर्भव करुणया ...

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

दासे मयि वितर दृष्टिं सकरुणामिति स्तोतुं वाञ्छन्कथयति भवानि त्वमिति यः। तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥ मनुष्यास्तिर्यञ्चो मरुतइति लोकत्रयमिदं भवाम्भोधौ मग्नं त्रिगुणलहरी कोटिलुठितम्। कटाक्षश्चेदऽत्र क्वचन तव मातः करुणया शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥ शिवस्त्वं शक्तिस्त्वं त्वमऽसि समया त्वं समयिनी त्वमात्मा त्वं दीक्षा त्वमऽयमऽणिमादिगुणगणः। अविद्या त्वं विद्या त्वमऽसि निखिलं त्वं किमऽपरं पृथक्तत्त्वं त्वत्तो भगवति न वीक्षामह इमे ॥ देवि त्र्यम्बकपत्नि पार्वति सति त्रैलोक्यमातः शिवे शर्वाणि त्रिपुरे मृडानि वरदे रुद्राणि कात्यायनि। भीमे भैरवि चण्डि शर्वरि कले कालक्षये शूलिनि त्वत्पादप्रणतानऽनन्यमनसः पर्याकुलान्पाहि नः ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्। लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ क्षीरसागरतरंगशीकरासारतारकितचारुमूर्तये। भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः। क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि प्रसीद सततं नमतां शरण्ये ॥ लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरं जयन्ति। यानि प्रणामसिलितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥ ओं शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः नमो ब्रह्मणे नमो वायवे

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

मि ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामऽवतु तद्वक्तारमऽवत्व-
ऽवतु मामऽवतु वक्तारं शान्तिः शान्तिः शान्तिः ॥ सह नावऽवतु
सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्विनौ अधीतं अस्तु मा
विद्विषावहै शान्तिः शान्तिः शान्तिः ॥ शन्नो मित्रः शं वरुणः श-
न्नो अस्त्वर्यमा शन्न इन्द्रश्चाग्निश्च शन्नो विष्णुरुरुक्रमः नमो ब्रह्मणे
नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं
ब्रह्माऽवादिषम् ऋतमऽवादिषं सत्यमऽवादिषं तन्मामाऽऽवीत्तद्व-
क्तारमाऽऽवीदाऽऽवीन्मामाऽऽवीद्वक्तारं शान्तिः शान्तिः शान्तिः ॥
सह नावऽवतु सह नौ भुनक्तु सह वीर्यं करवावहै तजस्विनौ अ-
धीतमस्तु मा विद्विषावहै शान्तिः शान्तिः शान्तिः ॥ शुभमस्तु
सर्वजगतां परहितनिरताः भवन्तु भूतगणाः । दोषाः प्रयान्तु शा-
न्तिं सर्वत्र सुखिनो भवन्तु लोकाः ॥ सर्वे भवन्तु सुखिनः सर्वे
सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्जनः
राजस्वस्ति प्रजास्वस्ति देशस्वस्ति तथैव च यजमानगृहे स्वस्ति
स्वस्ति गोब्राह्मणेषु च ॥ नमो ब्राह्मण्यदेवाय गोब्राह्मणहिताय च
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ वपुष्प्रादुर्भावादऽनु-
मितमिदं जन्मनि पुरा पुरारे नैवाऽहं क्वचिदऽपि भवन्तं प्रणत-
वान् । नमन्मुक्तः संप्रत्यऽतनुरऽहमऽग्रेऽप्यऽनतिमान् महेश क्षन्त-
व्यं तदिदमऽपराधद्वयमऽपि ॥ मा भैर्मन्दमनो विचिन्त्य बहुधा
यामीश्चिरं यातना नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्री-
धरः । आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य
व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ कल्पान्तकालोग्रकटुप्र-
कोपः स्फुटाट्टहास[illegible] । घोरारिसमर्दनबाहुः [illegible]

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

हाभयाद्रक्षतु वीरभद्रः ॥
पृथिवी शान्तिरऽन्तरिक्षं शान्तिर्द्यौः शान्तिर्दिशः शान्तिराऽऽपः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिस्त्वयाऽहं शान्त्या सर्वशान्त्या मह्यं द्विपदे चातुष्पदे शान्तिं करोमि शान्तिर्नो अस्तु शान्तिरऽसि शान्तिः शान्तिः शान्तिः ॥ ॐ यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यऽभिसंविशन्ति तदेव ब्रह्म ॥ सतो वा इमानि भूतानि जायन्ते सतो जातानि जीवन्ति सत प्रयन्त्यऽभिसंविशन्ति सदेव ब्रह्म ॥ चितो वा इमानि भूतानि जायन्ते चितो जातानि जीवन्ति चितं प्रयन्त्यऽभिसंविशन्ति चिदेव ब्रह्म ॥ आनन्दात्खलु इमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यऽभिसंविशन्ति आनन्दं ब्रह्म ॥ देवदेव महादेव शरणागतवत्सल । नान्यस्त्रातास्ति मे कश्चित्त्वदृते परमेश्वर ॥ शङ्करस्य च ये भक्ताः शान्ताः तद्गतमानसाः । तेषां दासस्य दासोऽहं भूयां जन्मनि जन्मनि ॥
य उदगात्पुरस्तान्महतो अर्णवाद्विभ्राजमानः सरिरस्य मध्ये स मावृषभो रोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु यद्ब्रह्माऽवादिष्मस्तन्मा मा हिंसीत्सूर्याय विभ्राजाय वै नमो नमः ॥ भोल अमृतेश्वर॰ आधीनामगदं दिव्यं व्याधीनां मूलकृन्तनम् । उपद्रवाणां दलनं महादेवमुपास्महे ॥ योगीश्वराऽप्रमेयात्मन्देवदेव जगत्पते । पाहि मां घोरसंसारसंकटात्परमेश्वर ॥ जन्मकोटिकृतं पापं पुरोक्तं प्रकटं च यत् । तत्सर्वं नाशमायातु तमः सूर्योदये यथा ॥
शिव हर शङ्कर नमामि शंकर शिव शंकर शम्भो । हे गिरिजापते भवानि शंकर शिव शंकर शम्भो ॥ बोल गिरिजापति शिव शा-

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

कर स्वामी की जय ॥ हरे राम हरे राम राम राम हरे हरे । हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥ ३ ॥ अन्तर्भक्तिचमत्काराच्चर्वणाऽऽमीलितेक्षणः नमो मह्यं शिवायेति पूजयन्ध्यां तृणान्यऽपि ॥

# अथ शिवनिर्वाणस्तोत्रम् ॥

ॐ नमः शिवाय

ॐ जयत्यनन्यसामान्यप्रकृष्टगुणवैभवः ।
संसारनाटकारम्भनिर्वाहणकविः शिवः ॥ १ ॥

ॐ नमः शिवाय भूतभव्यभाविभावभाविने । ॐ नमः शिवाय मातृमानमेयकल्पनाजुषे । ॐ नमः शिवाय भीमकान्तशान्तशक्तिशालिने । ॐ नमः शिवाय शाश्वताय शंकराय शम्भवे । ॐ नमः शिवाय निर्निकेतनिःस्वभावमूर्तये । ॐ नमः शिवाय निर्विकल्पनिष्प्रपञ्चसिद्धये । ॐ नमः शिवाय निर्विवादनिष्प्रमाणसिद्धये । ॐ नमः शिवाय निर्मलाय निष्कलाय वेधसे । ॐ नमः शिवाय पार्थिवाय गन्धमात्रसंविदे । ॐ नमः शिवाय षड्रसादिसामरस्यतृप्तये । ॐ नमः शिवाय तैजसाय रूपतानिरूपिणे । ॐ नमः शिवाय पावनाय सर्वभावसंस्पृशे । ॐ नमः शिवाय नाभसाय शब्दमात्रराविणे । ॐ नमः शिवाय निर्गलन्मलव्यपायपायवे । ॐ नमः शिवाय विश्वसृष्टिसंष्टवैकमीढुषे । ॐ नमः शिवाय सर्वतः प्रसारिपादसंपदे । ॐ नमः शिवाय विश्वभोग्यभोगयोग्यपाणये । ॐ नमः शिवाय वाचकप्रपञ्चवाच्यवाचिने । ॐ नमः शिवाय न-

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

लिने । ओं नमः शिवाय चाक्षुषाय विश्वरूपसन्दृशे । ओं नमः शि-
वाय सद्गुणत्रयाविभागभूमये । ओं नमः शिवाय पूरुषाय ओ-
क्तृताभिमानिने । ओं नमः शिवाय सर्वतो नियन्तृतानियामिने ।
ओं नमः शिवाय कालभेदकल्पनोपकल्पिने । ओं नमः शिवाय
किञ्चिदेवकर्तृतोपपादिने । ओं नमः शिवाय शुद्धाविद्यतत्त्वमन्त्ररूपि-
णे । ओं नमः शिवाय दृक्क्रियाविकस्वरेश्वरात्मने । ओं नमः शिवा-
य सर्ववित्प्रभो सदाशिवाय ते । ओं नमः शिवाय वाच्यवाचका-
ध्वषट्कभित्तये । ओं नमः शिवाय वर्णमन्त्रसत्पदोपपादिने । ओं न-
मः शिवाय पञ्चधाकलाप्रपञ्चपञ्चिने । ओं नमः शिवाय सौरजैन-
बौद्धशुद्धिहेतवे । ओं नमः शिवाय भक्तिमात्रलभ्यदर्शनाय ते ।
ओं नमः शिवाय सर्वतो गरीयसां गरीयसे । ओं नमः शिवाय स-
र्वतो महीयसां महीयसे । ओं नमः शिवाय सर्वतः स्थवीयसां स्थ-
वीयसे । ओं नमः शिवाय तुभ्यमऽस्त्वऽणीयसामऽणीयसे । ओं न-
मः शिवाय मन्दराद्रिकन्दराधिशायिने । ओं नमः शिवाय जाह्नवी-
जलोज्ज्वलाभजूटिने । ओं नमः शिवाय बालचन्द्रचन्द्रिकाकिरी-
टिने ओं नमः शिवाय सोमसूर्यवह्निमात्रनेत्र ते । ओं नमः शिवा-
य कालकूटकण्ठपीठसुश्रिये । ओं नमः शिवाय धर्मरूपपुङ्गवध्व-
जाय ते । ओं नमः शिवाय भस्मधूलिशालिने त्रिशूलिने । ओं न-
मः शिवाय सर्वलोकपालिने कपालिने । ओं नमः शिवाय सर्वदै-
त्यमर्दिने कपर्दिने । ओं नमः शिवाय नित्यनग्ननाकिने पिनाकिने ।
ओं नमः शिवाय नागराजहारिणे विहारिणे । ओं नमः शिवाय
शैलजाविलासिने सुखासिने । ओं नमः शिवाय मन्मथप्रमाथिने
पुरप्लुषे । ओं नमः शिवाय कालदेहदाहयुक्तिकारिणे । ओं नमः

CC-0 Shanka Bhavan Library, Faridabad. Digitized by eGangotri

# शिवनिर्वाणस्तोत्रम् ।

शिवाय नागकृत्तिवाससेऽप्यऽवाससे । ॐ नमः शिवाय भीषण-श्मशानभूमिवासिने । ॐ नमः शिवाय पीठशक्तिपीठकोपभेदिने । ॐ नमः शिवाय सिद्धमन्त्रयोगिने वियोगिने । ॐ नमः शिवाय सर्वदिक्चतुर्नयाधिकारिणे । ॐ नमः शिवाय सर्वतीर्थतीर्थताविधायिने । ॐ नमः शिवाय साङ्गवेदतद्विचारचारवे । ॐ नमः शिवाय षट्पादार्थषोडशार्थवादिने । ॐ नमः शिवाय साङ्ख्ययोगपाञ्चरात्रपञ्चिने । ॐ नमः शिवाय भोग्यदायिभोग्यदानतन्त्रिणे । ॐ नमः शिवाय पारगाय पारणाय मन्त्रिणे । ॐ नमः शिवाय पारपार्थिवस्वरूपरूपिणे । ॐ नमः शिवाय सर्वमण्डलाधिपत्यशालिने । ॐ नमः शिवाय सर्वशाक्तशासनानिवासिने । ॐ नमः शिवाय सर्वतन्त्रवासनारसात्मने । ॐ नमः शिवाय सर्वमन्त्रदेवतानियोगिने ॐ नमः शिवाय स्वास्थिताय नित्यकर्ममायिने । ॐ नमः शिवाय कालकल्पकाल्पिने सुनालने । ॐ नमः शिवाय भक्तकायसाख्यदाय शम्भवे । ॐ नमः शिवाय भूर्भुवःस्वरात्मलक्ष्यलाक्षिणे । ॐ नमः शिवाय शून्यभावशान्तरूपधारिणे । ॐ नमः शिवाय सर्वभावशुद्धशुद्धिहेतवे ।

ॐ नमः शिवाय भास्वते । ॐ नमः शिवाय भर्गते ।
ॐ नमः शिवाय शर्वते । ॐ नमः शिवाय गर्वते ।
ॐ नमः शिवाय खर्वते । ॐ नमः शिवाय पर्वते ।
ॐ नमः शिवाय रुद्रते । ॐ नमः शिवाय भीमते ।
ॐ नमः शिवाय विष्णवे । ॐ नमः शिवाय जिष्णवे ।
ॐ नमः शिवाय धन्विने । ॐ नमः शिवाय खड्गिने ।
ॐ नमः शिवाय चर्मिणे । ॐ नमः शिवाय [illegible]

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

ॐ नमः शिवाय भामिने । ॐ नमः शिवाय कामिने ।
ॐ नमः शिवाय योगिने । ॐ नमः शिवाय भोगिने ।
ॐ नमः शिवाय तिष्ठते । ॐ नमः शिवाय गच्छते ।
ॐ नमः शिवाय हेतवे । ॐ नमः शिवाय सेतवे ।
ॐ नमः शिवाय सर्वतः । ॐ नमः शिवाय सर्वशः ।
ॐ नमः शिवाय सर्वथा । ॐ नमः शिवाय सर्वदा ।

शिव भव शर्व रुद्र हर शंकर भूतपते गिरिश गिरीश भर्ग शशिशेखर नीलगल। त्रिनयन वामदेव गिरिजाधव माररिपो जय जय देव देव भगवन् भवतेऽस्तु नमः ॥ एतामष्टोत्तरशतनमस्कारसंस्कारपूतां भूतार्थव्याहृतिनुतिमुदाहृत्य मृत्युञ्जयस्य। कश्चिद्विद्वान्यदिह कुशलं सञ्चिनोति स्म लोके तेनान्येषां भवतु पठतां वाञ्छितार्थस्यसिद्धिः ॥ इति श्री व्यासमुनिना विरचितं शिवनिर्वाणस्तोत्रं सम्पूर्णम्

## अथ गुरुस्तुतिः॥

ॐ नमो गुरवे ॥ यः सर्वात्माखिलजनविभुर्देवदेवो महेशः स्वातन्त्र्यस्थो ध्रुवपदगतो निश्चलात्मा वरेण्यः। विश्वोत्तीर्णो भवभयहरः स्वेच्छया विश्वपूर्णः तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥ १ ॥ यस्मादीशात्प्रसरति शिवतत्त्वप्रभृतिज्यान्तमेतद्विश्वं परमवपुषा स्थीयते येन सम्यक्। यस्मिंस्तोयमिव क्रमतया लीयते वारिराशौ तं श्रीरामं० ॥ २ ॥ ब्राह्मीं मूर्तिं भुवनजनने राजसीं यो बिभर्ति तद्रक्षायां परमदयया वैष्णवीं सात्विकीं च। तत्संहारे ऽनलशततनुस्तामसीं रौद्रमूर्तिं तं श्रीरामं० ॥ ३ ॥ संसारा-

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri

ब्धौ विषयमकरे दुस्तरे संप्रमग्ना–नुद्धृत्यस्मात्परमकृपया भेददृष्टिं विभिद्य। शैवं स्थानमचलममलं प्रापिता येन भक्त्या तं श्रीरामं० ॥ ४ ॥ अस्मिंल्लोके ह्युपमन्युकुले यश्च मर्त्यावतारमायाति स्म तिमिरहरणः सज्जनानां हिताय! प्राकट्यार्थं स्वमतयशसः प्रेरितो रुद्रव्रातैः तं श्रीरामं० ॥ ५ ॥ सूर्ये प्राप्ते धनुषि च गुरौ तारकेशे तुलायामाद्ये भौमे सुखगतबुधे शत्रुगे भार्गवेपि। पंगुराहौ दशमसदने सिंहलग्ने तु जातः तं श्रीरामं० ॥ ६ ॥ मूर्त्या शम्भुः परमसुखदः तेजसा द्वादशात्मा प्रकृत्या तु शिशिरकिरणः पावनश्चित्रभानुः। शैवीदीक्षागलितवृजिनैर्लक्ष्यते यश्च सद्भिः तं श्रीरामं० ॥ ७ ॥ रूपं यस्य निखिलजगतां हृत्प्रमोदस्य हेतु यद्दन्तानां किरणपटलैः छात्रवृन्दा विरेजुः। व्याख्यानेन प्रहसितमुखः कर्तनः संशयानां तं श्रीरामं० ॥ ८ ॥ बाल्यादेव परमतपसि दुःसहो वर्तते स्म विश्वमेतत्परममहिमा यश्च स्वात्मन्यद्राक्षीत्। स्वात्मानं च जगति निखिले ज्ञानदृष्ट्या सदैव तं श्रीरामं० ॥ ९ ॥ यः शैवाख्यं परममऽमृतं निर्गतं स्वाऽननाऽब्जात् तत्पादाब्जानुगतमनसो भक्तवृन्दानपीप्यत्। एतद्देहं परित्यज्य ह्यगाच्छाश्वतं शैवधाम तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥ १० ॥

॥ समाप्ता ॥

CC-0 Sharika Bhavan Library, Faridabad. Digitized by eGangotri